गन्धस्येत्वे तदेकान्तग्रहण कर्त्तव्यम् । इह मा भूत् । शोभना गन्धा अस्य सु
आपणिक इति । अथानुच्छिन्ने कथं भवितव्यम् । यदि तावद्यदनुगतं तदभिस
क्षितुं सुगन्ध इति भवितव्यम् । अथ यत्प्रविशीर्णं सुगन्ध इति भवितव्यम् ॥

शेषाद्विभाषा ॥ १५४ ॥ शेषादित्युच्यते । कः शेषः । याभ्यः प्रकृ
भ्यः समासान्तो न विधीयते स शेषः।किमर्थं पुनः शेषग्रहणं क्रियते।याभ्यः प्र
तिभ्यः समासान्ता विधीयन्ते ताभ्यः कब्मा भूदिति। नैतदस्ति प्रयोजनम् । ये
तिपदं विधीयन्ते तेऽत्र बाधका भविष्यन्ति । अनवकाशा हि विधयो बाधका भव
सावकाशाश्च समासान्ताः । कोवकाशः। विभाषाकप् सोवकाशः। कपः प्रसङ्गेऽ
प्राप्नोति। परत्वात्कप् प्राप्नोति । तस्माच्छेषग्रहणं कर्तव्यम् । किंपुनरिदं शेषग्रह
कबपेक्षम् । यस्माद्बहुव्रीहेः कब्न विहितइति । आहोस्वित्समासान्तापेक्षम्। यस्मा
बहुव्रीहेः समासान्तो न विहित इति । किं चातः । यदि विज्ञायते क
पेक्षम् । अनृचो बह्वृच इत्यत्रापि प्राप्नोति । अथ समासान्तापेक्षम् । अनृक
साम बह्वृक्कं सूक्त मिति न सिद्ध्यति।अस्तु कबपेक्षम्। कथमनृचो बह्वृच इति।विशे
एतद् वक्तव्यम् । अनृचो माणवे । बह्वृचश्चरणाख्यायामिति । इदं तर्हि ऊधस

---

द्रव्यस्य गन्धलक्षणो गुण एकान्तो भवति । रूपादिव्यतिरिक्तावयविद्रव्यवादि
त्वेकान्त इवैकान्त एतत्स्थस्योपलम्भादित्याश्रीयते । यदनुगतमिति । अनुगतं नि
नमविभागापन्नं कुङ्कुमादिर्यदा देवदत्तादेर्भवति तदा तत्स्थत्वाद्गन्धस्यैकान्तत्वा
भवति । प्रविशीर्णमिति विभागेनावस्थितं देवदत्तादेः पृथगुपलभ्यमित्यर्थः ॥ १३५

शेषा ॥ कः शेष इति। अनेकस्योपयुक्तत्वात्किमपेक्षः शेष आश्रीयतइति प्रश्नः। इ
सामान्येनाह याभ्य इति । समासान्तविशेषस्तु न प्रदर्शितः । किमर्थमिति । सामा
विभाषा कब्विधीयताम् । तस्य विशेष समासान्ता बाधका भविष्यन्तीति प्रश्नः
परत्वात्कप्प्राप्नोतीति । उपदशा उपविंशा इत्यादिषु नित्यं डजादय इष्यन्ते ।
पुनरिति । पूर्वं याभ्यः प्रकृतिभ्य इति सामान्येनोक्तं ततो विशेषज्ञापनाय प्रश्न
यद्यपि कबपेक्षे शेषत्वे शेषग्रहणमनर्थकमन्तरेणापि शेषग्रहणमशेषान्नित्यं कब्विध
सामर्थ्याद्विभाषितकप्प्रसङ्गाभावाच्छेषादेव कब्विकल्पविज्ञानात् । तथापि विच
मात्रं क्रियते । अनृच इति । ऋगन्तात्कन्न विहित इति शेषत्वात्पक्षे परत्वा
प्प्रसङ्ग[illegible]। कबभावपक्षे ऽस्त्वकारस्यावकाशः समासान्तरं च । विशेष एतदि
तत एव विशेषविषयाद्वचनादत्र कन्न भविष्यतीत्यर्थः । तस्मिन् क्रियमाणेपि
अक्रियमाणे स्त्रीग्रहणे कुण्डोध्नीत्यत्र पक्षे परत्वात्कप्प्राप्नोति । क्रियमाणेपि स्त्री
हणे तस्य पुन्नपुंसकनिवृत्त्यर्थत्वात् पक्षे परत्वात्कपः प्रसङ्ग एव । एतच्चोदाहरण
त्रम् । उपदशादिषु पक्षे कप्प्रसङ्गात् । नैव कबपेक्षमिति । शेषग्रहणानर्थक्यप्रसङ्गा
यस्माद्धि नित्यः कब्विहितस्तस्माद्विभाषा न प्राप्नोति विरोधादिति पूर्वोक्तन्याया

नङि स्त्रीग्रहणं चोदितं तस्मिन् क्रियमाणेपि प्राप्नोति । एवं तर्हि नैव कबपेक्षं शेषग्रहणं नापि समासान्तापेक्षम् । किन्तर्ह्यनन्तरो यो बहुव्रीह्यधिकारः सोपेक्ष्यते । अनन्तरे बहुव्रीह्यधिकारे यस्माद् बहुव्रीहेः समासान्तो न विहित इति । कथमनृचो बह्वृच इति । वक्तव्यमेवैतत् अनृचो माणवे बह्वृचश्चरणाख्यायामिति॥

**ईयसश्च** ॥१५६॥ ईयस उपसर्जनदीर्घत्वं च * । ईयस उपसर्जनदीर्घत्वं चेति वक्तव्यम् । बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी विद्यमानश्रेयसी। पुंवद्वचनात्सिद्धम्*। पुंवद्वचनात्सिद्धमेतत् । पुंवद्भावोऽत्र भवति । ईयसो बहुव्रीहौ पुंवद्वचनमिति ॥

इति पञ्चमाध्यायः समाप्तः ॥

---

इति।एवं चोद्यसो ऽनङित्यनन्तरे बहुव्रीह्यधिकारेनङो विधानात्कुण्डोध्नीत्यादौ स्त्रियां कप्प्रसङ्ग भवति। कथमनृच इति।बहुव्रीह्यधिकारात्प्रागकारविधानाच्छेषत्वात्पक्षे कप्प्रसङ्गः । वक्तव्यमेवैतदिति । यद्येवं समासान्तापेक्षेपि शेषत्वे ऽनृचबह्वृचयोर्विशेषवचनादन्यत्रानृकबह्वृकयोः पक्षे कपः सिद्धत्वात्कस्य चिद्दोषस्याप्रसङ्गात्किमर्थमनन्तरबहुव्रीह्यधिकारापेक्षः शेष आश्रीयते । बहुव्रीह्यधिकाराच्च तत्पुरुषादिभ्य कपोप्रसङ्गः । किं चोपदशा इत्यादौ पक्षे कप्प्राप्नोति । अनन्तरे बहुव्रीह्यधिकारे डचोऽविधानात्तथा प्रियपथः प्रियधुर इत्यत्रापि प्राप्नोति । तस्मात्समासान्तापेक्षमेव शेषत्वमाश्रयणीयमिति चिन्त्यमेतद्भाष्यम् ॥ १३० ॥

ईय ॥ उपसर्जनदीर्घत्वमिति । ह्रस्वापवादो दीर्घत्वं विधेयम् । पुंवद्वचनादिति । गोस्त्रियोरुपसर्जनस्येति ह्रस्वः प्राप्त पुंवद्भावेन निवर्त्यते। यथा पुंविषयस्येकारस्य ह्रस्वो न भवति। एवमीयसः परस्येति श्रवणं भवति। बहुश्रेयसीत्यत्र हल्ङ्यादिलोपे विवदन्ते। केचिदाहुः।हलङ्यादिलोपेन न भाव्यम् ङ्यापोः स्त्रीप्रत्यययोर्ग्रहणात् स्त्रीप्रत्यये चानुपसर्जने तदादिनियमाभावादत्रोपसर्जनत्वान् ङीपस्तदादिनियमाद्धल्ङ्यादिलोपस्य प्रसङ्गाभावात् । अन्ये त्वाहुः । दीर्घग्रहणं तत्र ह्रस्वनिवृत्त्यर्थं कृतम । अतिखट्व इत्यत्र लोपो मा भूदिति । यदि चोपसर्जने तदादिनियमः स्यात्तदा ह्रस्वाल्लोपस्य प्रसङ्गाभावात्तद्व्यावृत्तये दीर्घग्रहणं न कुर्यात् कृतं तु यथेष्टमुपसर्जनादपि दीर्घाल्लोपं ज्ञापयतीति बहुश्रेयसीति सिद्धमिष्टम् ॥ १५६ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे पञ्चमोऽध्यायः समाप्तः ॥

